## ॥ शत्रुसंहारकमेकदन्तस्तोत्रम् ॥

श्रीगणेशाय नमः ।
सनत्कुमार उवाच ।
शृणु शम्भ्वादयो देवा मदासुरविनाशने ।
उपायं कथयिष्यामि तत्कुरुध्वं मुनीश्वराः ॥ १॥

गणेशं पूजयध्वं वै यूयं सर्वे समावृताः ।
स बाह्यान्तरसंस्थो वै हनिष्यति मदासुरम् ॥ २॥

सनत्कुमारवाक्यं तच्छ्रुत्वा देवर्षिसत्तमाः ।
ऊचुस्तं प्रणिपत्यादौ भक्तिनम्रात्मकन्धराः ॥ ३॥

देवर्षय ऊचुः ।
केनोपायेन देवेशं गणेशं मुनिसत्तमम् ।
पूजयामो विशेषेण तं ब्रवीहि यथातथम् ॥ ४॥

एवं पृष्टो महायोगी देवैश्च मुनिभिः सह ।
उवाचाराधनं तेभ्यो गाणपत्यो महायशाः ॥ ५॥

एकाक्षरेण तं देवं हृदिस्थं गणनायकम् ।
विधिना पूजयध्वं च तुष्टस्तेन भविष्यति ॥ ६॥

ध्यानं तस्य प्रवक्ष्यामि शृणुध्वं सुरसत्तमाः ।
यूयं तं तादृशं ध्यात्वा तोषयध्वं विधानतः ॥ ७॥

एकदन्तं चतुर्बाहुं गजवक्त्रं महोदरम् ।
सिद्धिबुद्धिसमायुक्तं मूषकारूढमेव च ॥ ८॥

नाभिशेषं सपाशं वै परशुं कमलं शुभम् ।
अभयं सन्दधन्तं च प्रसन्नवदनाम्बुजम् ॥ ९॥

भक्तेभ्यो वरदं नित्यमभक्तानां निषूदनम् ।
एतादृशं हृदि ध्यात्वा सेवध्वमेकदन्तकम् ॥ १०॥

सर्वेषां हृदि संस्थोऽयं बुद्धिप्रेरकभावतः ।
स्वयं बुद्धिपतिः साक्षादात्मा च सर्वदेहिनाम् ॥ ११॥

एकशब्दात्मिका माया देहरूपा विलासिनी ।
दन्तः सत्तात्मकः प्रोक्तः शब्दस्तत्र न संशयः ॥ १२॥

मायाया धारकोऽयं वै सत्तमात्रेण संस्थितः ।
एकदन्तो गणेशो वै कथ्यते वेदवादिभिः ॥ १३॥

सर्वसत्ताधरं पूर्णमेकदन्तं गजाननम् ।
सेवध्वं भक्तिभावेन भविष्यति सदा सुखम् ॥ १४॥

एवमुक्त्वा ययौ योगी स सनत्कुमार आदरात् ।
जय हेरम्बमन्त्रं वै समुच्चरन् मुखेन सः ॥ १५॥

ततो देवगणाः सर्वे मनुयस्तपसि स्थिताः ।
एकाक्षरविधानेन तोषयामासुरादरात् ॥ १६॥

पत्रभक्षा निराहारा वायुभक्षा जलाशिनः ।
कन्दमूलफलाहाराः केचित्केचिद्बभूविरे ॥ १७॥

संस्थिता ध्याननिष्ठा वै जपहोमपरायणाः ।
नानातपःप्रभावेण तोषयन् गणनायकम् ॥ १८॥

गतवर्षशतेषु वै सन्तुष्ट एकदन्तकः ।
आययौ तान्वरान्दातुं ध्यातस्तैर्यादृशस्तथा ॥ १९॥

जगाद स तपोयुक्तान् मुनीन्देवन्गजाननः ।
वरं वृणुत तुष्टोऽहं दास्यामि ब्राह्मणामराः ॥ २०॥

तस्य तद्वचनं श्रुत्वा हृष्टा देवर्षयोऽभवन् ।
उन्मील्य लोचने देवमपश्यन्समीपस्थितम् ॥ २१॥

दृष्ट्वा मूषकसंस्थं तं प्रणेमुस्ते गजाननम् ।
मुनयो देवदेवेन्द्रा पुपूजुर्भक्तिसंयुताः ॥ २२॥

पूजयित्वा यथान्यायं प्रणम्य करसम्पुटाः ।
तुष्टुवुरेकदन्तं तं भक्तिनम्रात्मकन्धराः ॥ २३॥

देवर्षय ऊचुः ।
नमस्ते गजवक्त्राय गणेशाय नमो नमः ।

अनन्तानन्दभोक्त्रे वै ब्रह्मणे ब्रह्मरूपिणे ॥ २४॥

आदिमध्यान्तहीनाय चराचरमयाय ते ।
अनन्तोदरसंस्थाय नाभिशेषाय ते नमः ॥ २५॥

कर्त्रे पात्रे च संहर्त्रे त्रिगुणानामधीश्वर ।
सर्वसत्ताधरायैव निर्गुणाय नमो नमः ॥ २६॥

सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिप्रदाय च ।
ब्रह्मभूताय देवेश सगुणाय नमो नमः ॥ २७॥

परशुधारिणे तुभ्यं कमलहस्तशोभिने ।
पाशाभयधरायैव महोदराय ते नमः ॥ २८॥

मूषकारूढदेवाय मूषकध्वजिने नमः ।
आदिपूज्याय सर्वाय सर्वपूज्याय ते नमः ॥ २९॥

सगुणात्मककायाय निर्गुणमस्तकाय ते ।
तयोदभेदरूपेण चैकदन्तय ते नमः ॥ ३०॥

देवान्ताऽगोचरायैव वेदान्तलभ्यकाय ते ।
योगाधीशाय वै तुभ्यं ब्रह्माधीशाय ते नमः ॥ ३१॥

अपारगुणधामायानन्तमायाप्रचरिणे ।
नानावतारभेदाय शान्तिदाय नमो नमः ॥ ३२॥

वयं धन्या वयं धन्या यैर्दृष्टो गणनायकः ।
ब्रह्मभूतमयः साक्षात्प्रत्यक्षं पुरतः स्थितः ॥ ३३॥

एवं स्तुत्वा प्रहर्षेण ननृतुर्भक्तिसंयुताः ।
साश्रुनेत्रान्सरोमाञ्चान्दृष्ट्वा तान् ढुण्ढिरब्रवीत् ॥ ३४॥

एकदन्त उवाच ।
वरं वृणुत देवेशा मनुयश्च यथेप्सितम् ।
दास्यामि तं न सन्देहो यद्यपि दुर्लभं भवेत् ॥ ३५॥

भवत्कृतं मदीयं तत् स्तोत्रं सर्वार्थदं भवेत् ।
पठते श्रुण्वते देवा नानासिद्धिप्रदं द्विजाः ॥ ३६॥

शत्रुनाशकरं चैव सुखानन्दप्रदायकम् ।
पुत्रपौत्रादिकं सर्वं लभते पाठतो नरः ॥ ३७॥

गृत्समद उवाच ।
एवं तस्य वचः श्रुत्वा हर्षयुक्ताः सुरर्षयः ।
ऊचुस्तमेकदन्तं ते प्रणम्य भक्तिभावतः ॥ ३८॥

सुरर्षय ऊचुः ।
यदि तुष्टोऽसि सर्वेश एकदन्त महाप्रभो ।
यदि देयो वरो नश्चेज्जहि दुष्टं मदासुरम् ॥ ३९॥

इति श्रीमुद्गलपुराणान्तर्गतं सनकादिकृतमेकदन्तस्तोत्रं समाप्तम् ।